# ॥ नलोपाख्यानसङ्ग्रहः ॥

# NALOPAKHYANA - SAṄGRAHA

BY

MAHAMAHOPADHYAYA

**SRI LAKSHMANA SURI**

**The Kuppuswami Sastri Research Institute**

**MADRAS-600004**

 **1974** [PRICE Rs. 3



# ॥ नलोपाख्यानसङ्ग्रहः ॥

# NALOPAKHYANA - SANGRAHA

BY

MAHAMAHOPADHYAYA
SRI LAKSHMANA SURI

The Kuppuswami Sastri Research Institute
MADRAS-600004

 1974 [PRICE Rs. 35



# FOREWORD

In my Foreword to the Bharata Sangraha (1967) published by the Kuppuswami Sastri Research Institute, I have given a brief account of the life, scholarship and achievement of Mahamahopadhyaya Pandit LAKSHMANASURI. In the list of the works written by that scholar given at the end of this book, mention is made of the NALOPAKHYANA which is now brought out in a new edition.

Pandit Lakshmanasuri is a distinguished writer of prose, poetry and drama in Sanskrit in modern times. His prose works have always been used as Texts for School and College study.

The story of the great Nala and his queen Damayanti from the Vanaparva of the Mahabharata has been condensed in this small book.

Thanks are due to Sri. T. L. Venkatarama Iyer, son of the author, for his help in bringing out this new edition, to Dr. V. Raghavan for seeing it through the Press and to the Bharati Vijayam Press, Madras-5 for their expeditious printing.

As every reader of the Mahabharata knows, the story is a thrilling one and is full of moral and ethical lessons. The great devotion of Damayanti to her husband in all the sufferings and trials undergone by King Nala is an illustrious example to all Pativratas. The patience of King Nala is also exemplary. Students will greatly be benefitted by reading this prose work ; they will be enabled not only to get a grasp of the Sanskrit language, its grammar and idioms, but also to imbibe the teachings of our epics.

Mylapore, Madras-4
26th June, 1968

K. BALASUBRAMANYA AIYAR

## PREFACE TO THE SECOND & THIRD EDITIONS

The K. S. R. Institute is grateful to different Universities who patronised and are continuing to patronise this book by prescribing it for the P. U. C. classes.

Thanks are due to Dr. S. S. Janaki for help in reading the proofs and the Bharati Vijayam Press, Madras-5 for the printing of the second and third editions of this book.

7-3-73
16-7-74

V. RAGHAVAN

॥ श्रीः ॥

# । नलोपाख्यानसंग्रहः ।

---

यत्प्रसादेन वचसां प्रसादादिगुणोदयः ।
साविर्भवतु वाग्देवी मयि वाचा प्रसन्नया ॥

आसीन्निषधेषु **नलो** नाम राजा । स हि साङ्गेषु वेदेषु धनुर्वेदे च पारं गतोऽश्वेषु कुशलो गुणैः सम्पूर्णश्च बभूव । तथा विदर्भराजस्य **भीमस्य दमयन्ती** नाम कन्यारत्नमजायत । सा खलु रूपेण लोकेऽद्वितीया बभूव । क्रमेण यौवनवती सा समीपेऽसकृत्कीर्त्यमानान्नलस्य गुणानाकर्ण्य तस्मिन् मनो बबन्ध । तथैव नलोऽपि दमयन्त्या रूपं पुनः पुनर्जनैः कुतूहलेन वर्ण्यमानं श्रुत्वा तस्यामनुरागं चक्रे । एवं सदा शृण्वतोरेव तयोरदृष्टः कामो व्यवर्धत । नलस्तु तं कामं मनसा धारयितुमशक्नुवन्नुपवनं जगाम । तत्र हंसान् वीक्ष्य तेष्वेकं जग्राह । गृहीतः स खगस्तमब्रवीत् - 'भो राजन्, मा मां वधीः । तव प्रियं करिष्यामि । दमयन्त्याः सका[illegible] त्वां प्रति तथा कथयामि, यथा सा त्वया विनान्यं मनसापि न मन्[illegible]' इति ।

तथेति तेन मुक्ते तस्मिन् सर्वे ते हंसाः **कुण्डिनाख्यं** विदर्भराजनगरं समुत्पत्य दमयन्त्याः समीपे निपत्य भुवि विसस्रुपुः । तान् दृष्ट्वा सखीभिः सह तद्ग्रहणायोपधावन्त्यां तस्यां बालायां, तथा लक्ष्यीकृतो हंसो मानुष्या गिरा तामामन्त्र्याबभाषे—'अयि भैमि,

ननु समुदीक्षितासि यौवनेन। तस्माच्छैशवोचितं विहारं विहाय किञ्चिदवहिता शृणु। अस्ति निषधेषु नलो नाम राजा। यं पुण्यश्लोकमाहुः। निश्चिन्वेकत्र सर्वगुणसमाहाराय चिरप्रयत्नवतो विधातुः क्रियाकौशलसिद्धिर्नैषधाख्यः पदार्थ इति। यथा त्वं स्त्रीणां रत्नभूतासि, एवं स पुरुषाणाम्। विशिष्टयोः सम्बन्धो हि गुणवान् भवति। तस्मात् प्रयतस्व पुण्यश्लोकस्य गृहिणीपदप्राप्तये' इति। सा तु तं प्रत्याह—'निष्कारणबन्धो, पतगोत्तम, यथा स राजा मय्यनुकम्पेत तथा तस्मिन्नपि व्याहरन् वाचा धर्ममवाप्नुहि' इति। तथेति ते हंसा नले तद्वार्तां निवेद्य यथागतं गताः।

दमयन्ती तु ततःप्रभृति बलवन्नलाक्रान्तहृदया मदनज्वरेण क्षामक्षामाङ्गी च बभूव। तदाज्ञाय राजा 'प्राप्तयौवनां कन्यामप्रतिपादयन् पिता वाच्यो भवति। कन्या च शोच्या स्यात्। तदवश्यं मयास्याः स्वयंवरः कारयितव्य' इति निश्चित्य तदर्थं सर्वान् क्षत्रियानाकारयामास।

अत्रान्तरे **सुधर्माणं** प्रविशन्तौ **नारदपर्वता**वृषी पूजयन्निन्द्रः प्राह—'ननु भवन्तौ, प्रत्यहं युधि निहतानां पार्थिवानां नवनवः समागमोऽत्र बभूव। स कथमिदानीं विच्छिन्न इव भाति?' इति। तं नारदः प्रत्यब्रवीत्—'भोः, शृणु तत्र कारणम्। अस्ति विदर्भराजस्य भीमस्य दमयन्ती नाम कन्या। तां सर्वासां स्त्रीणां रत्नभूतामवधेहि। अचिरादेव तस्याः स्वयंवरो भविष्यति। तां प्रार्थयन्तः

सर्वेऽप्यमी राजानस्तत्पुरं प्रत्यभिधावन्ति। अतोऽद्य समरसंरम्भो विरत इव' इति। तदन्तरे तत्रागता अग्नियमवरुणाश्च तच्छ्रुत्वा दमयन्त्यां जातरागाः शक्रेण सह स्वयमपि प्रतस्थिरे।

प्रयान्तस्ते कुण्डिनस्य नातिदूरे स्वयंवरार्थमागच्छन्तं स्मरमिव मूर्तिमन्तं नलं वीक्ष्य दमयन्त्यां निराशा भूत्वा 'भो भो नैषध, त्वमस्माकं दूतो भवन् साहाय्यं कर्तुमर्हसि' इति तमब्रुवन्। स तु 'करिष्यामि' इति तेभ्यः प्रतिज्ञाय 'के यूयम्, किं वा मया कार्यम्?' इति तान् पप्रच्छ। तत्क्षणं मघवानात्मानमग्न्यादींस्त्रींश्च यथावत्तस्मै व्याख्याय पुनराचख्यौ -'ननु, राजन्, वयं हि चत्वारोऽपि दमयन्तीं प्राप्तुमागताः। तत्र त्वमस्माकं दूतो भवंस्तस्यां व्याहर, 'इन्द्रादयश्चत्वारस्त्वां प्रार्थयन्ते। तेष्वन्यतमं वृणीष्व' इति। नैषधस्तु सपद्येव भग्नोत्साहः प्राञ्जलिः प्रोवाच—'ननु भवन्तः, यो यस्यां जातसङ्कल्पः स तामेव कथं परार्थमेवं वक्तुमर्हति? बलवती खलु भवतामिव ममापि दमयन्त्यामिच्छा। तस्मान्नार्हन्ति भवन्त एकार्थसमुपेतं मां तत्रैव दूतकर्मणा प्रेषयितुम्' इति।

देवास्तु तं प्रत्यूचुः—'ननु भोः, "करिष्यामि" इति पूर्वमस्मासु प्रतिज्ञाय न युक्तं हि पश्चादेवं कृपणं जल्पितुम्। तस्माद्गम्यतामनुत्तरम्' इति। स तु तत्क्षणं व्यावर्त्य भैमीगतं चेतः 'गुप्तिमत्यन्तःपुरे कथं मम प्रवेशः स्यात्?' इति तान् पृच्छन् 'प्रवेक्ष्यसि' इति शक्रेणोक्तस्तथेति गच्छन् केनाप्यनिवारित एव दमयन्त्याः समीपमुपजगाम। उपगच्छंश्च स तत्र महति दारिकामण्डले

चन्द्रमण्डलीमिव तारकामण्डले, विशेषेण शोभमानां तां वीक्ष्य सपद्येव प्रतिबोधितमिवोज्जृम्भमाणं कामं धैर्येणान्तर्नियच्छति स्म ।

दमयन्ती तु समीपमुपसर्पन्तं तमालोक्याकृत्यैव कमपि प्रभाववन्तं पुरुषविशेषमवधार्य, तत्सम्भावनाकृतत्वरा सखीभिः सह ससंभ्रमं मुक्तासना बभूव । तस्य तेजसा जडीभूतास्विव स्थितासु सखीषु दमयन्ती शनकैस्तमाबभाषे—'रूपमेवार्यमर्हत्तममवगमयति । तथा स्वरूपेणाप्यवगन्तुमुत्कण्ठते मे मनः । किं च । बलवद्रक्षितेऽत्र राजन्युग्रशासने च सत्यपि कथं नु केनाप्यलक्षितः प्रविष्टो भवान् ?'

स तु तां प्रत्यूचे—'अयि राजपुत्रि, नलं नाम नैषधं देवानां दूतकर्मणा त्वामुपस्थितं च मां विद्धि । इन्द्राग्नियमवरुणाश्चत्वारो देवास्त्वां प्रार्थयन्ते । तत्प्रभावेणैव बलवद्गुप्तिमत्यपि तवावरोधे ममानिरोधो बभूव । ब्रूहि कतमस्तेषु ते पतित्वेन रोचत इति ।' सा तु तान् देवानुद्दिश्य नमस्कृत्य नलं प्राह—'नाथ, योऽयं ममात्मा यच्चान्यन्मदीयं वस्तु तत्सर्वं हंसवाक्यश्रवणसमकालमेव त्वदधीनं कृतम् । त्वत्प्राप्त्यर्थमेव हि सर्वेऽप्यमी राजानोऽत्र सन्निपातिताः । तस्मात्त्वदेकभक्तां मां भजस्व । वैपरीत्ये तु विषाग्न्यादिनात्मानं त्यक्ष्यामि' इति । नलस्तु तां पुनरुवाच-'प्रार्थयमानेषु लोकपालेषु तेषां पादरजसाप्यतुल्यं मानुषं कथमिच्छसि ? तेषां विप्रियमाचरन् हि मर्त्यः कथं न मृत्युमृच्छेत् ? तस्मात् त्रायस्व मां देवताविरोधकृताद्भयात् । वृणीष्व च तेष्वन्यतमम्' इति । सा तु 'त्वामेव भर्तारं वृणे' इत्युक्त्वोच्चैः प्ररोदितुमारब्धा सती, 'कथं परार्थं दूत्येनागत्य तेनैव स्वार्थं साधयतु

नलः ?' इति ब्रुवति तस्मिन् पुनरवोचत्—'भो राजन्, आगच्छन्तु भवान् ते देवाश्च स्वयंवरसभाम्। तत्र तेषां सन्निधौ त्वां वृणे। ततस्त्वयि दोषो न स्याद्' इत्युपायमुक्त्वा च तं विससर्ज। सोऽपि तथेति तान् देवानेत्य सर्वं दमयन्तीसंवादं तेभ्यो यथावन्निवेद्य तदनुमत्या स्वं शिबिरमाससाद।

अथ प्राप्ते स्वयंवरदिने महता राजमण्डलेन मण्डितां सभां वरणस्रजा सह प्रविष्टा सा भैमी तत्र तं तं राजानमतीत्य नलं लक्ष्यीकृत्य पर्यटन्ती क्वचिन्नलाकारान् पञ्च पुरुषानपश्यत्। दृष्ट्वैव सा निर्विशेषाकारां तां पञ्चनलीं विस्मिता, देवेभ्यो नलं विवेक्तुकामा यानि देवतालिङ्गानि स्थविरेभ्यः श्रुतानि तानि तेषु सुनिपुणं निरूपयामास। यदा तु सुसूक्ष्ममपि तेषु नान्तरमुपलभते स्म, तदा तानेव देवान् शरणं व्रजन्ती सा बाला प्राञ्जलिरिदमाह—'यदि हंसवाक्येन मया नलः पतिर्वृतः, यदि च मनसा वाचा कर्मणापि न व्यभिचरामि, तदा लोकवृत्तसाक्षिणो देवाः पुण्यश्लोकं मे पतिं दिशन्तु, गृह्णन्तु च स्वं रूपम्' इति।

सपदि कृतप्रसादेष्वभौमानि स्वानि लिङ्गानि प्रकाशयत्सु देवेषु, सा स्वयमस्पन्दिना नेत्रेणास्वेदिना गात्रेणामहीस्पृशाङ्घ्रिणा च तांश्चतुरोऽप्यनिमिषान्, तथा तद्विलक्षणेन चक्षुर्निमेषादिलक्षणेन नलं च सम्यगवधार्य, तान् देवान् प्रणम्य तस्य नैषधस्य कण्ठे वरणस्रजमर्पयामास। देवास्तु तुष्टा नलायाष्टौ वरान् ददुः। तत्र शक्रो यज्ञे प्रत्यक्षदर्शनमनुत्तमां गतिं च प्रादात्। अग्निस्तु तदिच्छयाग्निसमु-

द्भवमात्मसालोक्यं च दत्तवान्। धर्मराजः पुनरन्नरसं धर्मे रतिं चानुगृहीतवान्। वरुणस्तावत्तदिच्छया जलोत्पत्तिमुत्तमां स्रजं च प्रसादीकृतवान्। एतावताप्यपरितुष्टास्ते देवा 'एका पुत्री एकः पुत्रश्चेत्यपत्यद्वयं जायताम्' इति सम्भूयैकं वरं दत्त्वान्तर्हिताः।

अथ यथाविधि निर्वृत्तविवाहमङ्गलो नलस्तया नवोढया सह स्वपुरमासाद्य तत्र तस्यां गृहलक्ष्म्यां तथा राज्यलक्ष्म्यां च समसंविभक्तयौवनश्रीश्चिरं विजहार। ततः स कालेन तस्यां भैम्यामिन्द्र**सेनाख्यं** पुत्रमिन्द्र**सेनाख्यां** पुत्रीं चोत्पादयामास॥

**॥ इति नलोपाख्यानसङ्ग्रहे प्रथमो भागः ॥**

---

# द्वितीयो भागः

---

इत्थं दमयन्तीनलावनुगृह्याग्न्यादिभिः सह त्रिदिवं गच्छन्निन्द्रः पथि **द्वापरेण** सह त्वरितमापतन्तं **कलिं** 'एवमतित्वरया कुत्र धावसि?' इति पप्रच्छ। 'दमयन्तीं वरीतुम्' इति प्रतिब्रुवन् स कलिः 'वृतो ह्यस्मत्सन्निधौ तया नलः' इति तेन प्रोक्ते, सक्रोधमिदमाह—'आः किमेतत्? कथं तिष्ठत्सु युष्मासु मानुषमवृणीत सा धृष्टा? तर्हि कर्तव्यमवश्यमेव तस्या दण्डधारणम्' इति। तदाकर्ण्य ते देवाः प्रत्यूचुः—'ननु भोः, अस्मदनुमत्यैव खलु तया नलो वृतः। का च वा प्राज्ञा कन्या समस्तगुणानामावासभूतं मन्मथमन्मथं तादृशं पुरुषपुङ्गवं न वृणीत? वरं हि तस्यां दण्डधारणादात्मानमेवात्मना हिंसितुम्' इति तमधिक्षिप्य यथागतं गताः।

गतेषु तेषु स कलिर्द्वापरमुवाच—'सखे, न खल्वेवं देवतावहेलनसमुत्थितं कोपमुपसंहर्तुमुत्सहते मे चेतः। अतोऽहं नले वसंस्तं राज्याद्दमयन्त्याश्च प्रभ्रंशयिष्यामि। तत्र त्वमक्षान् समाविश्य मम साहाय्यं कर्तुमर्हसि' इति। तथेत्यभ्युपगतवता तेन सह नलस्य पुरं प्राप्य कलिस्तत्र तस्मिन् प्रवेष्टुमन्तरप्रेप्सुश्चिरमुवास। अथ व्यतीतेषु द्वादशसु वर्षेषु तावदलब्धान्तरः स कदाचिद्भाविनोऽर्थस्य बलेनाकृतपादशौचं सन्ध्यामुपासीने तस्मिन् राजनि लब्धान्तरः सहसा विवेश। सन्दिदेश च वृषरूपेण तस्यैवानुजं पुष्करमेत्य 'दीव्य तव ज्येष्ठभ्रात्रा नलेन। तत्र तवाहं जयं सम्पादयामि' इति।

पुष्करस्तु तथा नलं प्राप्य प्रेक्षमाणायां भैम्यां 'अक्षविहारं करवाव' इति पुनः पुनरब्रवीत्। तदमृष्यमाणः स मानी तथेति कनीयसा भ्रात्रा पुष्करेण सह देवितुमारेभे। तदा द्वापराक्रान्तेषु पाशकेषु सर्वथा विपरिवर्तमानेषु स्वयं प्राज्ञतमोऽपि स नैषधः कलिबलेन मोहितः सन् 'अनेन जेष्याम्यद्य जेष्यामि' इत्युपरि ग्लहग्रहणव्यग्रो नाबुध्यत प्रतिक्षणं क्षीयमाणमायुस्सञ्चयमिवात्मनः कोशसञ्चयम्। यथा यथा चायं जीयते तथा तथास्य द्यूतेऽनुरागपिशाचिका वर्धते स्म।

तदाकर्ण्य पौराः प्रतिबोध्य तं ततो निवर्तयितुकामा मन्त्रिभिः सहिता राजद्वारमेत्य स्वागमनं द्वारपालमुखेन राज्ञे न्यवेदन्। देवी बहिरेव श्रोत्रपथात्तन्निवेदनाक्षराण्यवधूय भूताविष्ट इव 'इदमिदम्' इत्युत्तरोत्तरपणनोपरक्तचित्ते भर्तरि, स्वयं भृशमार्ता तदन्तिकमुपगम्य

शनकैरिदमाह—'नाथ, दीयतामवसरो दिदृक्षोः सामात्यवर्गस्य पौरजनस्य' इति। एवमसकृत्प्रोच्यमाने प्रियावचनमप्यनादृत्य 'रे पुष्कर, कामं जीयतामिदम्। इदमपरमुपादीयते पणनाय। अन्यदपि विपुलमस्ति मे वित्तम्' इत्यादिधूर्तालापमुखरे तस्मिन्, तदवेत्य नागराः मन्दोत्साहाः सन्तः 'नायमस्ति' इत्युक्त्वा परागताः। भैमी तु विपन्मुखप्रविष्टमिवात्मानं मन्यमाना धात्रीमाह, 'अयि बृहत्सेने, उच्यताममात्यवर्गो महाराजवचनात् "ज्ञायतां कियद्धनमवशिष्यते" इति। तया तथोक्ताः सचिवा राजानं द्यूतमूर्छया विमुच्यमानमिव मन्वानाः पुनरपि नागरैः सह तत्प्रतिबोधनार्थमागत्य द्वारपालं प्रेषयामासुः। पूर्वतोऽप्यधिकतरं द्यूतसक्तचित्ते तदुपरोधभूतां दौवारिकस्य विज्ञापनामनभिनन्दति भर्तरि, नैराश्येन शिथिलानुरागे प्रतिप्रयाते पौरवर्गे, प्रक्षीणप्राये च सर्वस्वे, सा वैदर्भी पिपतिषति कूले तिष्ठन्तमिवासन्नविनिपातमात्मानमवधार्य वार्ष्णेयनामानं सारथिमाहूयाह, 'ननु सौम्य, पश्य, यस्मिन् परमाणुकल्पमपि किल्बिषमुत्प्रेक्षितुमशक्यं तादृशस्य महाराजस्याकस्मादीदृशं व्यसनम्। प्रक्षीणप्रायं किल सर्वस्वं च। न शुद्ध्यति मे हृदयम्। यौ ममेमौ दारकौ तौ राज्ञो रथमारोप्य मम पितुर्गृहं प्रापय। एवं स्वामिनोऽनृणो भूत्वा स्वैरं याहि' इति। सोऽपि तथेति तत्पुत्रौ राज्ञो रथेन विदर्भेश्वरं नीत्वा भृशं दुःखितोऽयोध्याधिपतिमृतुपर्णं सूतकर्मणोपस्थितवान्।

नलस्तु जितसर्वस्वो भूत्वा 'भोः, दमयन्त्या दीव्य, नास्ति तेऽन्यद्धनम्' इति पुष्करेणावहसितः सन् स्वाङ्गात् सर्वाभरणान्यवतार्य

तूष्णीं प्रवव्राज। दमयन्त्यपि तथा प्रव्रजन्तं स्वनाथं वीक्ष्य स्वयं परिधानमात्रशेषा तमन्वधावत्। 'यद्यत्र कश्चिन्नलं पूजयेत् स मे वध्यः स्याद्' इति पुष्करेणाघोषिते, ततो भयेन नलस्याविनयेन च निर्विण्णा नागराः सत्कारार्हे तस्मिन् राजनि प्रव्रजत्युदासीना बभूवुः।

पत्नीद्वितीयो नगराद्बहिरेव त्रिरात्रं जलेन वृत्तिं कल्पयन् स नैषधः सर्वैरपि नगरवासिभिरनादृतः क्षुधा च परिपीड्यमानस्ततः प्रतस्थे। ततः पथि दिव्यरूपान् शकुनिनो वीक्ष्य व्यचिन्तयत्- 'अये, हिरण्यपक्षा ह्येते पक्षिणः। तदेतेषु गृहीतेषु द्विधा ममार्थसिद्धिर्भवति, मांसेन क्षुन्निवृत्तिः पक्षहिरण्येन धनलाभश्चेति। तदेतान् ग्रहीष्यामि' इति निश्चित्य परिधानवस्त्रमादाय तदुपरि चिक्षेप। ते तु तद्वस्त्रेण सहोड्डयमाना इदं जगुः- 'अयि दुर्बुद्धे! जानीह्यस्मांस्तव पराजयहेतुभूतानक्षान्। एते वयं सवाससि त्वय्यप्रीयमाणास्तदाहराम' इत्युक्त्वान्तर्हिताः।

एवं तैर्हृतवस्त्रो राजा पार्श्वगतां दमयन्तीमाह- 'प्रिये, येषां प्रकोपान्मम राज्याद्भ्रंशः प्राणयात्रायाश्च संशयः सर्वत्र चासम्भावना बभूव, त इमे प्रव्रजितेऽपि सवाससि मय्यप्रीताः शकुनिरूपेण मां विवाससं चक्रुः। अहो दशाया वैषम्यम्! ननु वैदर्भि, अयमेव दक्षिणापथः। अयं तु पन्था विदर्भान् गच्छति' इत्यसकृदुवाच। तद्वाक्येन पर्याकुला सा तं पप्रच्छ- 'नाथ, किमिदं ते व्यवसितम्? कथमीदृशे व्यसने त्वां परित्यज्य गच्छेयम्? आतुरस्येव विषमस्थस्य

पुंसः कलत्रं खलु दिव्यौषधमिव हिततमम्' इति। 'आत्मानं वापि परित्यजेयं, न पुनस्त्वाम्' इति तेन प्रत्युक्ते, सा पुनः प्राह - 'नाथ! यदि मां हातुं नेच्छसि, तदा किमित्येवमसकृद्विदर्भाणां पन्थास्त्वयोपदिश्यते? मया च ज्ञातपूर्व एव। अथ मन्यसे मां स्वजनं नेतुम्, तदा सहैवावां मम पितुर्गृहं गच्छावः। मम पिता तु त्वां पूर्वतोऽप्यधिकतरं मानयिष्यत्येव' इति।

स तु तां सानुनयमाह—'अयि भैमि! यथा तव पितुस्तथा ममापि राज्यमासीत्। पूर्वं समानया समृद्ध्या सर्वेषां बहुमानार्हो भूत्वा, कथमिदानीमेवं दुर्गतः शोच्यतमः श्वशुरगृहं यायाम्? लोके च सुखस्थो हि लोको बन्धूनालोकयितुमिच्छति, न विषमस्थः। अतो न युक्तमधुना तत्र गन्तुम्' इति सान्त्वयित्वा तस्या वाससैव स्वयं परिधानं कृतवान्। तथैकवाससा संवीतौ तौ दम्पती कुत्रचिदरण्ये शून्यां काञ्चन सभां जग्मतुः। तत्र श्रान्त्या भुवि प्रसुप्तायां दमयन्त्यां, स राजा व्यचिन्तयत्—'अहो बतेयं राजपुत्री स्वप्नेऽप्यतर्किताभिमां दशां प्राप्य मदर्थमेवं परिक्लिश्यते। यदीतः परमपि मामनुवर्तिष्यते, तदा इतोऽपि महत्तरं दुःखमियमनुभविष्यति। दारुणो हि मयि विधेरारम्भः। मयोत्सृष्टा त्वेषा कदाचित् स्वजनान् गत्वा सुखिनी स्यात्। निश्चिताद्दुःखाद् वरं हि संशयितं दुःखम्। न च स्वतपसा गुप्तामेनामलं खलु देवा अपि प्रधर्षयितुम्। तस्माद्यावदियं न प्रबुध्यते, तावदेव मयापक्रमितव्यम्' इति निश्चित्याकस्मात् पार्श्वगतेन खड्गेन तद्वाससोऽर्धं छित्त्वा कियच्चिद् दूरं धावन् पुनः प्रत्यावृत्य तस्याः

पादमूले निपपात। निपत्य च 'अयि निष्करुण! कथमनन्यपरायणामात्मनः प्रत्ययेन प्रसुप्तां जायां विजने वने परित्यक्तुं धृष्णोषि?' इत्यात्मानं विगर्हयन् 'हा विदर्भराजनन्दिनि! हा निषधेश्वरसर्वस्वभूते! हा दमयन्ति! मया पापेनोत्सृष्टासि। रक्षन्त्वेनां वनदेवताः' इति रुदन् कलिमलेन मोहितः प्रदुद्राव।

ततः प्रबुद्धा सा तमदृष्ट्वा भृशमुद्विग्ना सती "हा नाथ! हा पुण्यश्लोक! क्व नु मामुत्सृज्य गतोऽसि? 'न त्वां त्यजामि' इति तव गीरपि कथमेवं वितथा भवति? नाथ, कृतं परिहासेन" इत्यादि बहु विलपन्ती, 'असौ दृश्यते, एष दृश्यते', इति तत्र तत्र प्रधावन्ती, 'भद्र! ब्रूहि मे कच्चित्त्वया दृष्टः पुण्यश्लोकः' इति वृक्षादीन् पृच्छन्ती कस्यचिदजगरस्य मुखे पतिता सती 'महता सर्पेण गृहीताहं व्यापद्ये' इत्युच्चैर्विचुक्रोश। तदाकर्ण्य कश्चिद् व्याधः सद्यः प्रयुक्तेन शरेण तमजगरं निहत्य तां मोचयामास।

मोचिता च सा आत्मनो रूपेण मोहितं सङ्कटान्मोचनसम्बन्धेनान्तरीभूय बलादात्मानं प्रधर्षयितुं प्रवृत्तं तं व्याधहतकं गत्यन्तराभावेन शापाग्निना भस्मसात्कृतवती। तत्प्रसङ्गेन च सा 'यो निर्दोषं मम भर्तारमाविश्यैवं व्याकुलयति, सोऽपि मत्तोऽप्यधिकतरं कृच्छ्रवसतिं वसतु' इति पुनः शशाप। ततश्च सा रात्रिन्दिवमविश्रान्ततया 'पुण्यश्लोक' इति विक्रुश्य वनाद्वनं विचिन्वती त्रिरात्रान्ते कश्चित्तापसाश्रम द्रक्ष्यसि' इति तामाश्वास्य तिरोहितेषु

तेषु, विस्मिता सा पुनरप्युत्तरां दिशं प्रययौ। तत्र सुदूरमेकाकिन्येव व्रजन्ती गजाश्वादिसङ्कुलं वणिक्सार्थं दृष्ट्वा किञ्चिल्लब्धाश्वासेव तन्मध्यं प्रविवेश।

तत्र विकृतेन तस्या वेषेणाप्राकृतेन तेजसा च भीताः केचन सार्थवाहाः प्रदुद्रुवुः। अपरे तु तत्र तत्र निलिल्युः। इतरे पुनः 'हा हताः स्मः' इति विचुक्रुशुः। एवं पर्याकुलेषु तेषु शुचिर्नाम सार्थवाहो धैर्येण तस्याः समीपमुपगम्य पप्रच्छ - 'अयि कल्याणि! किं त्वमस्य वनस्य रक्षी देवतासि? उत वा यक्षी, यास्माभिराराध्यस्य यक्षराजस्य मणिभद्रस्य प्रिया? आहोस्विद्या काचनान्या देवता? न त्वां मानुषीं मन्यामहे। त्वद्दर्शनेनैव समुद्विग्ना वयम्। तद्भद्रे, विधत्स्वास्माकं भद्रम्। त्वां शरणं प्रपन्नाः स्मः' इति। सा तु तद्वाक्येन दूयमानहृदया प्रत्याह—'भोः, मा भैष्ट मत्कृते। अहं मानुष्येव, न देवता। राज्ञो नलस्य भार्यां दमयन्तीं नाम वैदर्भीं मां विजानीत। साहमिदानीं भर्तुरसन्निधानेन दुःखिता तमन्विष्य पर्यटामि। स यदि युष्माभिर्दृष्टस्तं ब्रूत। कुत्र वा युष्माभिर्गम्यते? तच्च मे कथयत' इति। 'न दृष्टो नलः। अस्माभिस्तु चेदिविषयो गम्यते' इति तैः प्रत्युक्ते, 'मयि कृपया मामपि तन्नगरं नयत' इतिताननुनयन्ती सा तैः सह प्रयाति स्म। अथ प्रयान्तस्ते सार्थवाहाः श्रान्ताः सायं कस्यचित् तटाकस्य तीरे कृतसन्निवेशा यथासुखं सुषुपुः। दमयन्त्यपि तत्रैव क्वचिदेकान्ते स्थण्डिले शेते स्म।

अर्धरात्रसमये वन्यानां गजानां यूथं यदृच्छया तत्र पानीयार्थ-

मागत्य तदितरगजगन्धेन क्षुभितं सत् तदुन्माथाय द्रुतमभिदुद्राव। तद्गन्धाघ्राणेनैव भीतेषु शृङ्खलादिकमाच्छिद्य पलायमानेषु ग्राम्यगजेषु,ताननुद्रवत्सु च तेष्वारण्यकेषु, तत्र तत्र सुखप्रसुप्ताः सार्थवाहास्तत्प-दाक्रान्ता बहवो विनिष्पिष्टा विनेशुः। सपदि समुत्थितेषु तु शेषेषु गुल्मकोटरादिकमाश्रित्य प्रलीनेषु, सर्वं मुहूर्तमाकुलीकृत्य ते वन्याः गजाः प्रतिप्रयाताः। महता तेन कदनेन समुत्थिते हाहाकारे, स्वयं प्रबुद्धा सा राज्ञी घृणाक्षिप्तचित्ता भृशं प्रव्यथिता बभूव। शान्ते तु तस्मिन् क्षोभे, शिष्टाः सार्थवाहाः सम्भूय, 'अननुभूतपूर्वस्यास्यानर्थस्य को वा हेतुः स्यात्?' इति मन्त्रयामासुः। तत्र 'मणिभद्रोऽद्य सम्यङ् नाराधितः' इति, 'यक्षराजो न पूजितः' इति; 'विघ्नेश्वरो न प्रसादितः' इति, 'ग्रहा नानुकूलाः' इति च भिन्नभिन्नं जल्पत्सु, तानाक्षिप्यापरे प्रोचुः - 'या काचनास्मत्सङ्घे पिशाचिकेवोन्मत्तरूपा दृश्यते, तस्या एवेदं कर्म। अतो यदि सेदानीं दृष्टिपथे भवेत्तदा तां लोष्टपाषाणा-दिना हन्याम' इति। तच्छ्रुत्वा ह्रिया भिया च कलुषीभूता सा साध्वी किञ्चिदन्तरं पलाय्य क्वचित् स्थित्वा व्यचिन्तयत्—'अहो, कथ-मेतावन्तमनर्थं मयि संयोज्यापि न तृप्ता नियतिः। नमो देवेभ्यः। प्रसन्नास्ते कृपणायां मयि कृपां कुर्वन्तु' इति शक्रादीन् प्रार्थयामास।

तावदुदिते सवितरि पुनः प्रस्थितैस्तैः सह गच्छन्ती सा सायाह्ने चेदिराजस्य सुबाहोर्नगरमाससाद। तदा यदृच्छया प्रासाद-गता राजमाता रथ्यायामर्धवस्त्रेण चरन्तीं तामवलोक्य सञ्जातकुतू-हला तामाहूय तन्नामवृत्तादि पप्रच्छ। सा तु बाष्पपूर्णाभ्यां नेत्राभ्यां

गद्गदेनाक्षरेण च तां प्रत्याह-'राज्ञि, पतिपरायणां सैरन्ध्रीं मां विद्धि। साहं भर्तुः सकाशात् प्रभ्रष्टा तमन्विष्य पर्यटन्ती भवत्यासादितास्मि' इति। तदाकर्ण्य दयार्द्रभावा सा राजमाता तां सान्त्वयामास- 'अयि वत्से! प्रक्षीणं ते दुःखम्। तव मातरीव मयि कृतप्राणयात्रैव वस। अहं तव भर्तारं दूतैरन्विष्यानेतुं यतिष्ये' इति। सापि साञ्जलिस्तां प्रत्यूचे-'अम्ब, दुर्लभाः खलु प्रायेणास्मिन् लोके त्वादृश्यः कृपणपक्षपातिन्यः स्त्रियः। तदप्रत्याख्येयं ते शासनम्। किंतु यदि मां कश्चन प्रार्थयेत पश्येद्वा स ते वध्यः स्यात्। भर्तुरन्वेषणार्थे तु ब्राह्मणाः केवलं मां यथावसरं पश्यन्तु। अनियोज्या चाहं त्वयान्यया वा परस्योच्छिष्टादौ। यद्येतदनुमन्यसे, तदा तव गृहे वत्स्यामि' इति। तदाकर्ण्य प्रमुदिता राजमाता 'अयि महाव्रते, कल्याणि, इदं हि नाम पातिव्रत्यं यदनर्थपरम्परयाप्यप्रच्युतचित्तत्वम्। तद्भद्रे, यथा ते मतं तथा करोमि' इति तां प्रशस्य स्वपुत्रीमाहूय 'वत्से **सुनन्दे**, अस्याः शीलेन प्रीतास्मि। तदेनां भगिनीनिर्विशेषमुपलालय' इत्युक्त्वा तस्यां तामर्पयामास।

नैषधस्तु दयितामुत्सृज्य गच्छन् दावाग्निना परीतस्य वनस्य मध्ये 'अभिधाव पुण्यश्लोक, अभिधाव मत्परित्राणाय' इत्यार्तनादं शुश्राव। 'मा भैषीः' इति त्वरया तं प्रदेशं प्राप्य तत्र कुण्डलिताकारं कञ्चन सर्पमद्राक्षीत्। अप्राक्षीच्च 'कस्त्वं, का च ते व्यथा?' इति। स एनमुवाच—'शृणु राजन्। अहं किल **कर्कोटको** नाम नागराजः पुरा नारदमवमत्य कुपितेन तेन 'स्थावरवत्तिष्ठ' इति शप्तोऽस्मि।

मया पुनरनुनीतः स मुनिः 'यदा त्वां नलः स्थानान्तरं नेष्यति, तदा मोक्ष्यसे' इति शापान्तमूचिवान्। ततःप्रभृति पदात्पदमपि चलितुमशक्नुवन्नहं तवागमं प्रतीक्ष्य स्थितोऽस्मि। अतो मामग्निना दह्यमानादस्मात् स्थानात् स्थानान्तरं प्रापय। तत्र ते श्रेयो विधास्यामि' इति। तेन तथा कृते, शापान्मुक्तः स नागः 'राजन्, स्वानि कतिचन पदानि गणयन् याहि। ततस्ते श्रेयो विधास्यामि' इति तमुवाच। स तथेति स्वपदानां गणनेन गच्छन् दशमे पदे यदा 'दश' इति संख्यामुच्चारयामास, सदा स सर्पस्तं दशति स्म। दष्टमात्रश्च स ह्रस्वबाहुर्विकृताङ्गश्च संवृत्तः। तदा प्रकृतिमापन्नः कर्कोटकस्तं सानुनयमाह— 'राजन्, इदानीं कञ्चित्कालमज्ञातेनैव त्वया वस्तव्यम्। अतस्त्वद्रूपपिधानार्थं त्वच्छरीरे वास्तव्यस्य कलेः सन्तापार्थं च मया दष्टोऽसि। तदनेनैव रूपेणायोध्याधिपमृतुपर्णमेत्य तं कञ्चित्कालमुपास्स्व। तत्र ते श्रेयो भविष्यति। यदा तु स्वं रूपमाप्तुमिच्छसि, तदा परिधत्स्वेदम्' इति तस्मै वस्त्रद्वयं प्रदायान्तर्हितः। तद्वाक्यमादाय तूर्णमृतुपर्णमेत्य स नृपः 'महाराज, **बाहुको** नामाहमश्वनियमनेऽन्नरसकरणे शिल्पकर्मणि च कुशलोऽस्मि। तस्य मे वृत्तिं कल्पय' इति प्रार्थयामास। शीघ्रगमने समुत्सुकः स तु तद्वाक्यमभिनन्द्य तमश्वानामध्यक्षं वितन्वन्, पूर्वं तत्राधिकृतौ **जीवलवार्ष्णेयौ** च तस्यानुचरौ चकार।

**॥ इति नलोपाख्यानसङ्ग्रहे द्वितीयो भागः ॥**

---

# तृतीयो भागः

विदर्भराजो भीमस्तु नलं द्यूतव्यसनेन राज्यात्प्रभ्रष्टं भार्यया सह प्रव्रजितं चाज्ञाय, तद्गतिपरिज्ञानाय कृतमतिर्ब्राह्मणानाहूय मन्त्रयामास। 'ननु भगवन्तः, श्रूयते किलास्मज्जामातुर्निषधेश्वरस्य दुःश्रवो दशाविपाकः। ईदृशे व्यसने तमाश्वस्य तद्दुःखलघूकरणं हि बन्धुकृत्यम्। तस्मादावश्यके तदन्वेषणे भवतः शरणं प्रपन्नोऽस्मि। अतो यूयं मयि कृपया तौ दमयन्तीनलावानयत। आनेतुमशक्यत्वेऽपि तयोः स्थानपरिज्ञानमन्यतरदर्शनमपि मे प्रियमेव स्यात्। तथोपकृतवतां तु सर्वमपि मे राज्यं निष्कृतये न पर्याप्तम्' इति प्रशस्य धनेन तान् पूजयित्वा तन्मार्गणाय प्रस्थापयामास।

तथा प्रवृत्तेषु तेषु, सुदेवो नाम ब्राह्मणस्तत्र तत्र पर्यटन् यदृच्छया चेदिराजस्य गृहं प्राप्तस्तत्र सङ्गतैर्ब्राह्मणैः सह पुण्याहं वाचयामास। तदन्तरे तत्र सुनन्दया सह चरन्तीं दमयन्तीं वीक्ष्य तदन्तिकमेत्य प्रोवाच—'अयि भैमि, कच्चित्कुशलिनी वर्तसे? दिष्ट्या त्वां स्वस्तिमतीं पश्यामि। तव मातापितरौ भ्रातरोऽन्ये च ते बान्धवाः सर्वे स्वस्थास्तव दुःखेनास्वस्थाश्च। त्वदन्वेषणाय प्रेषितेषु विप्रेष्वन्यतमं तव भ्रातुः सखायं सुदेवं मां विजानीहि। तव दारकौ हि तव बन्धुभिर्भृशमुपलाल्यमानावपि त्वद्दुःखेन दुःखितौ सर्वमेव राजकुलं भूयस्तरां दुःखसागरे निमज्जयतः' इति।

तं स्वजनवृत्तान्तमाकर्ण्योत्कण्ठिता सेयं द्विजं प्रणम्य यावत् किमपि प्रष्टुमुपाक्रमत, तावदुत्थितेन दुर्निवारवेगेन शोकावेगेन स्तम्भितवृत्तिरक्षिभ्यां बाष्पपूरं वर्षन्ती 'हा हा' इति विचुक्रोश। तत्सुनन्दामुखादवेत्याभिपतिता राजमाता 'भो ब्रह्मन्! कस्त्वं? केयं? कीदृशं वास्या व्यसनं? कथं त्वया प्रतिपन्ना? सर्वं तथ्येन मे ब्रूहि' इति तं पप्रच्छ। स तु तदुदन्तं यथावृत्तं यथाज्ञातं चोक्त्वा तामाह, 'पश्यत्वत्र भवती मलेन च्छन्नं मेघच्छन्नमिव बालचन्द्रसममस्या भ्रुवोर्मध्ये भ्राजमानं पिप्लुम्। अयमेव मे दर्शयामास चिरविप्रोषिता-मप्येनाम्' इति।

तदनु सरभसं सुनन्दया प्रक्षालिते तन्मुखमण्डले व्यभ्रे नभो-मण्डले चन्द्रमण्डलमिव प्रकाशमानं तं पिप्लुमवलोक्य राजमाता तां कण्ठे समाश्लिष्य, 'हा मम जाते! विदर्भकुलललामभूते! देवताभ्य-र्थ्यसौन्दर्यमहोदये! व्रतकर्कशहृदये! हा राजाधिराजमहिषि! कथं त्वमपीदृशे दुर्जाते पतितासि? अहो निष्करुणो विधिः! ब्रह्मन्! इयं दमयन्ती मम भगिन्याः पुत्री। एषा तु मम पुत्री सुनन्दा। अस्याः प्रसवार्थं यदाहं मम पितुर्दशार्णपतेर्गृहं गता, तदैनां मम भगिनी प्रसूतवती। तदा मया दृष्टोऽयं पिप्लुरधुना निर्णयाङ्कः संवृत्तः' इत्यु-क्त्वा मुक्तकण्ठमुच्चैः प्ररुरोद। अथ युगपदेव प्ररुदिते सर्वस्मिन् राजकुले, दमयन्ती तामाश्वस्य प्राह—'अम्ब! अनतिक्रमणीयं नाम भवितव्यम्। तदत्र किं विलापेन? अज्ञातसम्बन्धयापि त्वया सुनन्दानिर्विशेषं पोषि-तास्मि। अधुना तु वत्सयोर्दर्शनोत्कण्ठा मां त्वरयति। तदविलम्बेन

प्रस्थापय मां ते भगिन्या निवेशनम्' इति। तत्क्षणं सा स्वपुत्रं सुबाहु-माहूय सर्वं तद्वृत्तान्तमावेद्य तेन सज्जितेन बलवद्गुप्तिमता चतुरन्त-यानेन दमयन्तीं कुण्डिनाय प्रेषयामास। आगतायां तु दुहितरि भीम-स्यान्तःपुरं सर्वमपि मोदखेदाभ्यामाकुलितं बभूव। राजा तु कृतकार्यं सुदेवं महता धनेन मानयामास। दमयन्ती तु स्वजनं प्राप्य स्वपुत्रौ चाश्लिष्य किञ्चिन्निर्वृतेव तां रात्रिं गमयामास।

परेद्यवि सा मातरमेकान्ते चोदयामास–' अम्ब, यदि मां जीवन्तीमिच्छसि, तदा प्रयतस्व पुण्यश्लोकेन मां संयोजयितुम्' इति। सा तु तद्दुःखेन भृशं दुःखिता भूत्वा, रहसि राज्ञे निवेदया-मास, ' नाथ! यदि शीघ्रं नलो नानीयते, तदा दुर्लभं वत्साया जीवितं भविष्यति। तस्मादविलम्बेन सोऽन्वेष्टव्य' इति। तदाकर्ण्य सम्भ्रान्तो राजा पूर्ववद्ब्राह्मणानाहूय कार्यं चावेद्य, ' दमयन्तीमापृच्छ्य यात' इति तान् शशास। तथेत्यापृच्छ्यमानांस्तान् विप्रान् प्रणम्य सा साञ्जलिः सविनयमावेदयामास–' महत्खलु मम कार्यं युष्मा-स्ववस्थितम्। कृपणायां मयि कृपां कृत्वा मम प्राणेश्वरं निषधेश्वरं मे प्रयच्छत। युष्मास्वेव न्यस्तभारास्मि। तस्माद्भवन्तस्तत्र तत्र तं विचिन्वन्तः कार्यसिद्ध्या प्रत्यागच्छत। विचिन्वद्भिर्भवद्भिस्तु ' अयि कितव, सुतां प्रियां वाससोऽर्धेन परित्यज्य क नु प्रयातोऽसि? प्रसीदाद्यापि तस्यां तपस्विन्याम्' इति तत्र तत्रोद्घोषयितव्यम्। एतदाकर्ण्य, यः कश्चन प्रतिब्रूयाद् विकृतिं भजेद्वा स विशिष्य ज्ञातव्य' इति तान् प्रयापयामास।

अथ व्यतीतेषु गणरात्रेषु, **पर्णादो** नाम कश्चिद्ब्राह्मणो दमयन्तीसमीपमेत्य कथयामास - 'अयि राजपुत्रि, तत्र तत्र तव सन्देशमुद्घोषयन्नहमयोध्यां प्राप्य तत्र राज्ञ ऋतुपर्णस्य सभायां च यथापूर्वमुदघोषयम् । तत्र राजा अन्यो वा न कोऽपि प्रतिब्रवीति स । ततो निर्गतं मां ह्रस्वबाहुर्बाहुको नाम राज्ञः सूतः स्वयमेकान्ते सबाष्पमनुनयति स - "ननु ब्रह्मन्, अतिविषमस्था अपि भर्तरि क्रोधं नोत्सृजन्ति खलु चारित्रकवचाः पतिव्रताः । तन्न युक्तं हि दैवदुर्विपाके योन्यन्तरप्रविष्टमिव सीदन्तं भर्तारमुपालब्धुम्" इत्युक्त्वा प्रारुदत्' इति ।

सा तु तं सम्मान्य 'भर्तर्यागते भूयस्त्वां तोषयामि' इति तमनुज्ञाप्य मातरमेकान्ते प्राह - 'अम्ब ! तव सन्निधौ किञ्चित्कार्यं चिकीर्षामि । तदनुमन्यस्व । न चैतत् पित्रे निवेदनीयम्' इत्युक्त्वा ततो लब्धानुज्ञा सती सुदेवमाहूय प्रोवाच - 'ब्रह्मन् ! त्वय्येव मे कार्यसिद्धिर्निश्चिता । अतस्त्वमनेन यथाऽयोध्यां प्राप्य राजानमृतुपर्णं रहसि ब्रूहि, 'दमयन्ती नलस्यालाभेन पुनः स्वयंवरमास्थिता । तदर्थं राजानः समागच्छन्ति । तस्या आशयस्तु त्वयि लग्न इव लक्ष्यते । एकाहान्तरितश्च स कालः । शीघ्रं प्रयाहि' इति ।

स तथा तमुपेत्य विविक्ते तद्वचनमाचष्ट । तदाकर्ण्य दमयन्तीकामेन प्रवेगितः स राजा ससंभ्रमं नलमाहूय शशंस - 'भद्र बाहुक ! यदर्थं मया त्वं रक्षितोऽसि, प्राप्तो हि तस्य प्रयोजनस्य कालः । श्रृणोषि दमयन्तीं नाम वैदर्भीं वरवर्णिनीम् । सा किल स्वभर्तुर्नाशेन

पुनः स्वयंवरायोद्यता। श्वोभूतश्च स दिवसः। तस्यां सक्तं हि मे हृदयम्। तस्माज्जवनतमैरश्वैरस्तमित एवाहस्करे कुण्डिनं नेतुमर्हसि' इति। वज्रपातेनेव कर्णं विदारयता तेन वचनेन व्याघूर्णमानः स नैषधो व्यचिन्तयत्, 'कथं नु नामेदम्? किं दमयन्त्यपि विधूय धर्ममसज्जनसेविते पथि पदं निदध्यात्? किं वा मत्सङ्ग्रहव्यग्रायास्तस्यास्तदर्थोऽयमुपायः स्यात्? भवतु नाम यथा तथा वा। अहमस्य सूतकर्मणा तत्र गत्वा ज्ञास्यामि' इति निश्चित्य राजानमाह - 'देव, सावशेष एवास्मिन्नहनि त्वां कुण्डिनं नेष्यामि। पश्य मे हयेषु विज्ञानम्' इत्युक्त्वा सुशिक्षितांश्चतुरोऽश्वान् परीक्ष्य तान् रथे योजयामास। 'अरे, महत्खलु कार्यमुपस्थितम्। दवीयानध्वा गन्तव्यः। अल्पश्च कालोऽवशिष्टः। सत्येवं किमिति गन्तुमप्यशक्तान् दुर्बलानश्वान् योजयसि?' इति राज्ञाक्षिप्तः स भूयस्तमुवाच - 'शक्ताः खल्वेते ततोऽपि दूरतरमध्वानं गन्तुम्। अहमत्र प्रतिभूरस्मि। तथा ह्येषां लक्षणं लक्ष्यते, यदि न प्रत्येषि ब्रूहि भवतोऽभीप्सितानश्वान्। तान् योजयामि' इति। तर्हि चोदयेत्युक्त्वा वार्ष्णेयेन सह रथमारूढे राजनि प्रस्थितास्ते हया जानुभ्यां भुवि निपतिता नलेनाश्वासिताः सन्तः समुत्पत्याकाशमार्गेण प्रधावन्ति स्म।

तेन प्रहृष्यति ऋतुपर्णे वार्ष्णेयश्चिन्तयामास - 'अहो अन्यादृश्यमीषां गतिः। किमयं बाहुको मातलिर्भवेत्? आहोस्विदश्वशास्त्रस्य प्रणेता शालिहोत्रमुनिः स्यात्? उताहो अस्मत्स्वामी नल एव स्यात्? अस्य स्वरः क्रियाकौशलं वयश्च तत्स्वरादिना संवादि।

रूपं तु केवलं विसंवादि भवति। भवतु सर्वं क्रमेण द्रक्ष्यामि' इत्यवस्थितवान्। तावदेव बहून् पर्वतान्वनानि नदीश्चातीत्य गरुडवेगेन प्लवमानेषु रथ्येषु, रथात् पतितमुत्तरीयमादातुकामो राजा 'क्षणमश्वान्नियच्छ, यावद्वस्त्रमाहरामि' इति नलमाह। 'अतिक्रान्तं खल्वध्यर्धयोजनम्' इति वदन्तं नलमृतुपर्णः प्रोवाच---भद्र बाहुक, न क्वापि लोके सर्वज्ञता निष्ठां गता। अतो मयेदमुच्यते। यथा तवाश्वेष्वसाधारणं कौशलम्, एवं मम गणनेऽप्रतिमं पाण्डित्यमस्ति' इत्युक्त्वा सन्निहितं विभीतकवृक्षं निर्दिश्य 'एतावन्त्येवास्मिन् फलानि पत्राणि च' इति तत्संख्यानिर्णयमूचिवान्। तदाकर्ण्य नलः सपदि हयान्नियम्य 'अप्रत्यक्षमिवेदं तव वचनं परीक्ष्य प्रत्यक्षयिष्यामि' इति परशुपाणी रथादवततार।

'ननु महद्धि कार्यमुपस्थितं, तदलं विलम्बेन। पश्चात् परीक्ष्यताम्' इति वदन् राजा 'नाकृत्वास्य निर्णयं कर्तास्मि कार्यान्तरं, यदि तन्नानुमन्यसे तर्हि वार्ष्णेयसारथिर्याहि' इत्युक्त्वा रथादवतीर्णं तं सानुनयमाह—'भद्र, तर्ह्येकां शाखां परीक्ष्य त्वरितमायाहि' इति। तथा तां शाखां गणयित्वा विस्मितो नल ऋतुपर्णमाह-'राजन्, नूनमन्यादृशं ते गणने पाण्डित्यम्। तां विद्यामश्वहृदयविनिमयेन मे दातुमर्हसि' इति। दमयन्तीगतेन सङ्कल्पेन बलवदाकृष्यमाणस्तत्र क्षणविलम्बमप्यसहमानः स राजा स्वयं पङ्गुरिव तेन विना गन्तुमशक्तः संस्तदप्यङ्गीकृत्य, 'भद्र बाहुक! गृहाणाक्षहृदयं, येन गणनेऽहमिवाद्वितीयः स्याः। अश्वहृदयं तु त्वय्येव न्यासभूतं तिष्ठतु। मन्दीभवन्ति

हि दिनकरस्य रश्मयः। अतो नालमितः परं मन्दायितुम्' इत्युक्त्वा तस्मै तां विद्यामुपदिदेश।

तदुपदिष्टं तं मन्त्रं क्वचिदेकान्त उपविश्यावर्तयति नले, तस्य शरीरात् कलिः स्वरूपेण बहिर्निर्जगाम। निर्गच्छंश्च स पापः क्रुधा शप्तुमुद्यतं नलं निवार्य ससान्त्वमिदं प्रार्थयामास—भो, दीनवत्सल! तव भार्यायाः शापेन कर्कोटकस्य विषाग्निना च भृशसन्तप्तं मां किं पुनस्तापयितुमिच्छसि? तदलं सम्यक् शिक्षितस्य मे शिक्षया। इतः परं त्वन्नाम गृणतामपि विषयं न वीक्षेय। तन्मुञ्च मां त्वां शरणं प्रपन्नम्' इति। कृपालुना तेन विसृष्टः स कलिः सन्निहिते तस्मिन् विभीतकवृक्षे प्रविवेश। ततःप्रभृति स वृक्षोऽमङ्गलः कलिहेतुश्च बभूव।

एवं राहुणा निर्मुक्तश्चन्द्रमा इव कलिना निर्मुक्तो नलः पुनः सारथ्यं कुर्वन्नतिगम्भीरेण रथघोषेण दिशो मुखरयन् सन् सायाह्ने कुण्डिनं प्रविवेश। तेन रथघोषेण स्वभर्तारमागतं मन्वाना दमयन्ती संभ्रमेण प्रासादमारुह्य तदभिमुखी तस्थौ। तावदयोध्याधिपतिमायान्तं विदित्वा भीमस्तं सोपचारमानाय्य पूजयन् प्रसङ्गेन तत्समागमे हेतुं पप्रच्छ। ऋतुपर्णस्तु मनस्येवमकरोत्—'यद्यत्र स्वयंवरः प्रस्तुतः स्यात्तदा नायमेवं पृच्छेत्। न चात्र तदर्थसन्नाहो राजकुले सम्भ्रमो राज्ञां समागमो वा दृश्यते। वयं पुनर्वटोश्चपलया गिरा वञ्चिताः कामेन च पराभवं गमिताः स्मः। अतो न युक्तमस्मदागमनं वक्तुम्' इति निश्चित्य भवन्तमभिवादयितुमागतोऽस्मीति प्रत्युत्तरं दत्तवान्। भीमोऽपि तदाकर्ण्य 'कथमभिवादयितुमित्याह? को हि नामैवमल्पीय-

सेऽर्थायातिदूरमध्वानमेकाहेनातिक्रम्यागच्छेत्? तन्नैतदेवम्। भवतु। क्रमेण स्पष्टीभविष्यति' इति मनसा विमृशंस्तथास्त्विति तं प्रत्याह। तदनु तेनान्नपानादिनोपचरित ऋतुपर्णो वार्ष्णेयेन सह सुखं सुष्वाप।

सवार्ष्णेये ऋतुपर्णे गते, तद्रथ्यान् विश्रमय्य तत्समीपे समुपविष्टं ह्रस्वबाहुं तं नलं प्रासादात् प्रेक्षमाणा दमयन्ती वितर्कयामास, 'अश्रावि खलु नलस्य रथनिर्घोषः। तत्कथं कोऽपि विलक्षणः पुमान् दृश्यते? किमृतुपर्णोऽपि पुण्यश्लोक इव हयज्ञानवान् स्यात? आहोस्विद्रासभीव लोककान्तस्य मे कान्तस्य रूपेऽप्यप्रीयमाणस्य दैवस्य किमप्येतद्विलसितं स्यात्! स्निह्यत्यस्मिन् मे मनः। प्रादुर्भवन्ति च शुभानि निमित्तानि। तदेनमेव परीक्षिष्ये' इति निश्चित्य **केशिनीं** नाम स्वां परिचारिकां नलान्तिकं प्राहिणोत्।

सा चैनमुवाच—'आर्य, अस्माकं स्वामिनी दमयन्ती त्वां पृच्छति, 'के यूयम्? कच्चिद्युष्माभिर्नैषधो नलो दृष्ट' इति। स तु प्रकृतं स्वं नाम वृत्तं चोक्त्वा पुनरुवाच—'भद्रे, नलस्त्वात्मनैवात्मनि निदर्शनं गतः। अतो नान्येन द्रष्टुं शक्यः' इति। तद्वाक्यं दमयन्त्यै निवेदयन्ती सा तदादेशेन पुनरेत्य पर्णादवचनमेनं श्रावयामास। तेन च तस्मिन्नेव प्रत्युत्तरे दत्ते, तदावेदयन्तीं दूतीं पुनस्तच्चेष्टापरिज्ञानाय सा प्रेषयामास। सापि स्वयं किञ्चिदब्रुवाणैव तद्व्यापारान् पश्यन्ती पुनर्दमयन्तीमेत्य विस्मिता व्याचख्यौ - 'स्वामिनि, अत्यद्भुतं खलु मया तत्र दृष्टम्। शृणु, वर्णयामि। अयं बाहुकः केनचिदल्पविवरेण द्वारेणानमितशिरा असङ्कुचितगात्रश्श्रान्तः प्रविवेश। तदा

तद्द्वारं प्रकाममुन्नम्य विपुलमासीत्। अयोध्याधिपतेर्भोजनार्थं प्रेषितानि द्रव्याणि अग्निं जलं च स्वयमेव सृष्ट्वा तेन पपाच। तेन पाणिभ्यां मृदितानि पुष्पाणि पुनर्हृषितानि भवन्ति, न तु म्लायन्ति’ इति। सा तु संभ्रमेण तत्पक्वमन्नं तथा किञ्चिदानाय्य भक्षयन्ती, ‘हा नाथ! कथमिमामवस्थां प्रपन्नोऽसि?’ इति मूर्छिता निपपात। क्षणाल्लब्धसंज्ञा सेयं स्वदारकौ केशिन्या सह तदन्तिकं प्रेषयामास। नलस्तु तौ स्वपुत्रौ दोर्भ्यामादायाङ्के निधाय मुहुर्मुहुरालिङ्ग्य चिरं रुरोद। पुनश्च धैर्यमवलम्ब्य तामूचे—‘अयि, ममाप्येतत्तुल्यौ दारकौ भवतः। एतद्दर्शनेन तत्स्मृतिर्बभूव। असकृदिहागच्छन्त्यां त्वयि शङ्का भवेत् तद्गम्यताम्’ इति दारकाभ्यां सह तां यापयामास।

तच्चाकर्ण्य सा भैमी तं नलं निश्चित्य सहसा मातरमेत्य तस्यै निवेदयामास – ‘अम्ब, बहुशः परीक्षितोऽसौ बाहुकाख्यः पुरुषः। तव जामातुर्यदसाधारणं चेष्टितं, तदेतस्मिन् सर्वं तथैव भवति। रूपमेकं वर्जयित्वा नास्त्यन्तरमस्य पुण्यश्लोकस्य च। तत्परीक्षार्थं किमहं तत्र गच्छामि, उत स इहानीयताम्? यत्ते मतं तत् प्रब्रूहि’ इति। सा तु सपदि भर्तुरनुमतिमवाप्य तं नलमन्तःपुरमानाययामास।

सन्निहितं नलं दमयन्ती पप्रच्छ—‘अयि बाहुक! अपि जानीषे सुप्तामनन्यपरायणां धर्मपत्नीमर्धवाससा वने परित्यज्य परागतं धर्मवत्सलं निषधेश्वरम्?’ इति। सोऽपि तां प्रत्यूचे-‘अयि धर्मज्ञे, आत्मनः कृते क्लिश्यमानाया जायाया दुःखमसहमानस्तल्लघूकरणाय तां त्यक्तवान्यदि, कोऽत्रोपालम्भो भवति? का हि नाम त्वां

विनान्या कुलसम्पन्ना नारी शीलमुत्सृज्यैवं पुनरन्यं भर्तारं वृणुयाद् ?' इति। सा तु तदाकर्ण्य भीता वेपमानतनुलता प्रोवाच—'मा मां तथाविधां शङ्किष्ठाः। पर्णादवचनेन त्वामयोध्याधिपतौ सूतकर्मणा स्थितमवधार्य त्वदानयनाय मया कृतोऽयमुपायः। कोऽन्यस्त्वदृते-ऽतिदवीयसीं पदवीमेकाह्नेन लङ्घयितुं शक्तः? यद्यहं पापाशया स्यां, तदा त्वन्तस्साक्षिभूतो ममायं प्राणवायुरद्यैव मामुज्झित्वा निष्क्रामतु' इति शपथं चक्रे। सपदि पुष्पवृष्ट्या सह समापतन्त्यामशरीरिण्यां गिरि तद्वचनमनुवदन्त्यां, गतसन्देहो नलो नागराजदत्ते वाससी पर्यधात्। तत्क्षणमाविर्भूतस्वरूपं तं 'हा नाथ' इत्यभिद्रुत्य दमयन्ती कण्ठे समाश्लिष्य रुरोद। नलोऽपि तां दयितां तौ पुत्रौ च मुहुर्मुहुरालिङ्ग्य रुरोद जहर्ष च। भीमस्तु नलं प्राप्तमाकर्ण्य 'सदारं तं प्रातर्द्रष्टास्मि' इत्यनुमन्यते स्म। एवं संवत्सरद्वया-दूर्ध्वं पुनस्सङ्गतौ तौ दम्पती परां निर्वृतिं प्राप्य स्वप्रवासकथासङ्कथ-नेनैव रात्रिशेषं गमयामासतुः।

प्रभाते तौ दमयन्तीनलौ कृतसंस्कारौ वस्त्राभरणादिभिरलं-कृतौ च सन्तौ राजानं भीममेत्य प्रणेमतुः। तेन प्रमुदितः स राजा सर्वस्मिन्नपि नगरे महोत्सवं प्रवर्तयामास। ऋतुपर्णोऽपि तन्नलागमन-माज्ञाय स्वयं प्रमना अपि व्रीडितो भूत्वा नलमाहूय तमेकान्ते सान्त्वयामास। स तावत् कृतमुपकारं स्मरन् स्वयं भीतं तमाश्वास्य तस्मै अश्वहृदयं चोपदिश्य तमयोध्यायै प्रस्थापयामास।

तदनु परिमितेन परिवारेण स्वपुरं प्राप्तो नलो देवनाय पुष्करम्

आह्वयते स्म । तदमृष्यमाणे सर्वस्वमेकग्लहेन पणीकृतवति पुष्करे, प्रवृत्ते च पुनर्द्यूते, नलो जयति स्म । जितमवाङ्मुखं पुष्करमाश्वासयन्नलः प्राह—'रे रे पुष्कर ! यद्यपि त्वं वधार्हचेष्टितस्तथापि भ्रातृस्नेहो मे त्वयि न विच्छिद्यते । अतस्त्वदीयं राज्यं प्राप्य स्वस्थानं याहि' इति तं प्रेषयामास । अथ पौरानाश्वास्य दमयन्त्या सहितो नलो यथापूर्वं राज्यं चक्रे । अत्र चायं श्लोको भवति—

**कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।**
**ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥** इति ॥

---

**॥ इति श्रीलक्ष्मणसूरिविरचितो नलोपाख्यानसङ्ग्रहः समाप्तः ॥**

। ॐ तत्सत् ।

# WORKS OF MM. LAKSHMANA SURI

## MAHAKAVYA

*Bhagavatpādābhyudaya

Kṛṣṇalīlāmṛta

## LAGHUKAVYA

Viprasandeśa

Manassandeśa

Veṅkaṭeśastava

*Gurustavamālā

Karuṇaka-An Elegy

Prapanna-Vībhīṣaṇa

George-Deva-Śataka

## PROSE

*Bhāratasaṅgraha

Rāmāyaṇasaṅgraha

*Nalopākhyānasaṅgraha

Bhīṣmavijaya

## DRAMA

Delhi-sāmrājya

Paulastyavadha

*Ghoṣayātrā

## PHILOSOPHY

Kārikās on Daśopaniṣads

## COMMENTARIES

On Anargharāghava

,, Uttararāmacarita

,, Mahāvīracarita

,, Bālarāmayaṇa

On Veṇīsaṁhāra

,, Ratnāvalī

,, Pārijātamañjarī of Madana

---

*Those marked with asterisk can be had at the K. S. R. Institute, Mylapore, Madras.